आसंसारमखण्डलोकसुलभैः संशोभमानः फलैः
स्वर्गारोहणमार्ग एष विलसत्यभ्रङ्कषोच्छ्रायतः ॥ ॥९७॥

यावत् स्थास्यति पञ्चभेदसहितः सत्यः प्रपञ्चोऽखिल-
स्तावद् द्वैतमतं चरिष्यतितरामस्मिन् धरित्रीतले ।
यावत् स्थास्यति सञ्चरिष्णुरथवा द्वैतप्रकाशः क्षितौ
तावद्वत्स्यति सर्वमेव भुवनं मायान्धकारोज्झितम् ॥९८॥

शान्तः सर्वजनान् समीरयति यश्चेतः समुल्लासयं-
श्चण्डोद्दामगतिः प्रभञ्जयति चोद्दण्डान् प्रकाण्डानपि ।
योऽसौ सर्वजगत् पुनाति पवनो नृत्यन्ति येनागमाः
सोऽयं मध्वमुनीश्वरो विजयते साक्षाज्जगत्पावनः ॥९९॥

येनोद्भासितविष्टपेन निबिडं निर्धूतमन्धं तमो
येनोन्मीलितलोचनेन जनता सम्प्रापिता सत्पथम् ।
येनादर्शितवस्तुना प्रकटितो भेदप्रपञ्चोऽखिल-
स्तस्मै विष्णुपदाश्रिताय महसे हंसोत्तमार्यो नमः ॥१००॥

---

(९८) अत्र पूर्वार्धोपवर्णितं जगतो द्वैताधारत्वं निरस्योत्तरार्धे द्वैत-स्यैव जगदाधारत्वं आस्थीयते ।

(९९) अस्मिन् श्लोके साक्षाद्वायुरूपी श्रीमदाचार्यो वर्ण्यते । प्रका-ण्डान्-तरुस्कन्धान्, लक्षणया उद्दण्डपण्डितांश्च । येनागमाः-येन अगमा आगमाश्चेति द्वेधा पदच्छेदः ।

(१००) विष्णुपदाश्रितः—आकाशाश्रितः, विष्णुचरणाश्रितश्च । हंसो-त्तमः-तेजस्विश्रेष्ठः सूर्यः, परमहंसोत्तमश्च ।

|| श्रीः || 336

# || मध्वानन्दलहरी ||



विद्यासागर-व्याकरणमहोपाध्याय-साहित्यशिरोमणि-

साहित्यनिपुणादि विद्योपाधिभाजा

के· एल्· व्यासरायशास्त्रिणा



विरचिता

कुम्भघोणस्थ

" शारदाविलासमुद्रालये "



मुद्रापिता



" उडुपि " नगरे

कल्मञ्जे व्यासाचार्येण



प्रकाशिता च ।

1940.

॥ श्रीः ॥

# प्रस्तावना ।

अथ द्वैतमतप्रतिष्ठापकः श्रीमान् मध्वाचार्यः ११९९ तमे क्रैस्ताब्दे "उडुपि" इति नाम्ना प्रसिद्धस्य रजतपीठपुरस्य नातिदूरवर्तिनि पाजकक्षेत्रे श्रीमद्वेदवतीमध्यगेहभट्टयोः पुत्रत्वेन भुवमवततार । सोऽयमाचार्यो भगवत्कार्यसाधनार्थमादौ हनूमद्रूपेण पश्चात् भीमरूपेण चावतीर्णस्य साक्षाद्वायोरवतारत्वेन प्रथते । तस्मादयं हनूमानिति भीमसेन इति च प्रथामवाप ।

द्वैतमतस्य प्रचारणार्थमासेतुहिमाचलं सर्वाणि तीर्थक्षेत्राण्यटन् तत्र तत्र विद्वद्गोष्ठीषु दर्शितात्मविक्रमोऽसौ वादीभसिंहः अनुमानतीर्थः, आनन्दतीर्थः इत्यादीन्यन्वर्थानि नामान्यवाप । विद्वत्सभास्वनितरसाधारण्या वाग्धोरण्या विदलयामास विमतानि । कन्दलयामास द्वैतसिद्धान्तप्ररोहान् निगमावनौ । कुण्ठयामास साटोपान् प्रतिभटान् । आरुरोह वेदान्तसाम्राज्यसिंहासनम् । प्रतिष्ठापयामास च द्वैतमतेन सह यदृच्छया द्वारकातः समागतां श्रीकृष्णप्रतिमां रजतपीठपुरे ।

द्वैतमतं प्रतिष्ठापयन्नसौ सर्वेषां निगमवचसां विष्णोः सर्वोत्तमत्वे महातात्पर्यमदीदृशत् । जीवात्मपरमात्मनोः शाश्वतिकं भेदमातिष्ठत । जगतः सत्यत्वं प्रत्यपादयत् । एवं तदुपन्यस्यमानानां सिद्धान्तानां सुश्लिष्टत्वमवगच्छन्तः सहस्रशो जनास्तच्छिष्यत्वमवापुः ।

श्रीमदाचार्योऽसौ पुण्यसलिलाया भागीरथ्यास्तीरमधिवसन् सूत्रभाष्यादिकानुच्चावचान् ग्रन्थान् प्राणैषीत्, ये खलु तदीया यशोराशय इव दिगन्तविसृमरप्रभाः समन्तात् विभ्राजन्ते। उच्चावचानां निगमवचसां स्वारसिकानविरुद्धानर्थान् वर्णयन् विविधानि व्याख्यानरत्नानि निरमासीत्, यानि खल्वद्यापि परंपरागतानि शिष्यनिचयस्य कण्ठभूषणतां व्रजन्ति।

एते चान्ये च साम्प्रदायिकेषु ग्रन्थेषूपवर्ण्यमानाश्चरित्रांशाः कृतावस्यां वाच्यविधया व्यङ्ग्यविधया चानुवर्णिताः। अथत्वाधुनिकैश्चरित्रकारैरुट्टङ्कितो मार्गश्चाप्यत्र मनागादृतः। तथाहि— अनन्तशयनं गतेन श्रीमदाचार्येण शङ्कराचार्यो वादे निर्जित इत्येतावन्मात्रं मध्वविजयादवगम्यते। स च शृङ्गेरिमठाधीशो विद्याशङ्कराचार्य इति ग्रन्थान्तराणां शासनपत्राणां च परीक्षया निश्चप्रचं चरित्रकारैः। तदनुरोधेन विद्याशङ्कराचार्यः श्रीमदाचार्येण निर्जित इत्युक्तमस्मिन् ग्रन्थे।

अपरं च श्रीमदाचार्यः काञ्चीपुरं गत इति मध्वविजयादौ न प्रस्तूयते। कृतावस्यां श्रीमदाचार्यस्य काञ्चीपुरवृत्तान्तः समनुवर्णितः। किमत्र प्रमाणमिति चेदवधीयताम् - मध्वविजये पयस्विनीतटं गतः इति वर्ण्यते श्रीमदाचार्यः। पयस्विनीतटं चोभयत्र प्रस्तूयते मध्वविजये— केरलेष्वेकं श्रीरङ्गसमीपेऽन्यत्। तत्र श्रीरङ्गसमीपस्थं पयस्विनीतटं काञ्चीपुरमेवेति बहुप्रमाणपर्यालोचनया निर्णीतमाधुनिकैश्चरित्रकारैः। तस्मादस्मिन् ग्रन्थे काञ्चीपुरगमनमाचार्यस्य वर्णितम्। एतादृशानां

चरित्रमूलकानां विषयाणां निर्मूलत्वं न शङ्कनीयमास्तिकधौरेयैरित्यर्थयामः ।

कृतिरियं वाचकमहाशयानां सौकर्याय विषमपदटिप्पण्या संयोज्य प्रकाश्यते । यद्यत्र मूले टिप्पण्यां वा मानुषतासुलभाः प्रमादाः सम्भवन्ति तर्हि ते सदयं मर्षणीयाः सहृदयैरित्यर्थयामः ।

अपि च स्वीयमुदारमाशयं प्रकाश्य कृतिमिमामभिनन्दितवतां महामहोपाध्यायपुरोगमानां महाशयानां पुरस्तात् शतशो धन्यवादानर्पयामि । अपरञ्च ग्रन्थमिमं सदयं प्रकाशितवतां सुगृहीतनाम्नां श्रीमत्कल्मञ्जे व्यासाचार्याणां पुरस्तात् कृतज्ञतां प्रकटयामि ।

कृतिरियं साधुरसाधुर्वा भवतु; सर्वथैव वस्तुगौरवात् श्रीमदाचार्यबहुमानाच्च सहृदयैराद्रियेतेति कृत्वा सम्प्रति तेषां पुरस्तादुपह्रियते ।

“ अकौशलेन ग्रथितेति जाति-
प्रसूनमालां किमु सन्त्यजन्ति ”

के. एल्. व्यासराजशास्त्री.

---

महामहोपाध्याय-पण्डितराज-अभिनवभट्टबाण-शब्दतर्कालङ्कार विद्याभूषण-विद्वत्कविप्रभृतिविरुदमालालङ्कृतानां श्रीमतां रा० च० वि. कृष्णमाचार्याणामभिप्रायः—

भोः शास्त्रिमहाशयाः !

भवतां शिवतातीनां पुस्तकं मस्तकेन मे ।
कलितं ललितं प्रीतिमतनीदतनीयसीम् ॥

श्रव्यता शब्दसंदर्भे भव्यता व्यङ्ग्यवाच्ययोः ।
नव्यता च समुल्लेखे न व्यपैति हृदो मम ॥

सरसाः कवयोऽद्यापि महसा कविताजुषा ।
दीप्यन्त इति हर्षो मे कोऽप्यन्तः कुरुते स्थितिम् ॥

भवदीयः

रा० च० वि० कृष्णमाचार्यः ।



इमां श्रीमन्मध्वानन्दलहरीं

श्रीमद्द्वैतसिद्धान्तप्रतिष्ठापनधुरन्धराणां श्रीमत्परमहंसपरिव्राजकाचार्यवर्याणां दिगन्तविसृमरविशदयशोभासुराणां

श्रीमदुत्तरादिमठाधीश्वराणां

**श्रीमत्सत्यध्यानतीर्थ श्रीचरणानां**

सन्निधौ भक्तिपुरःसरमुपहारीकुरुते

श्रीमद्गुरुपदकमलचञ्चरीकः

व्यासराजशास्त्री.

॥ श्रीः ॥

महामहोपाध्याय-भारतसिंह-विद्याभूषणादिविरुदमालाभूषितानां श्रीमतां खापे. रामचन्द्राचार्याणामभिप्रायः—

---

महोपाध्याय-विद्यासागरादि बिरुदावलीभूषित श्रीयुत-व्यासराजाचार्यैः विरचिता श्रीमन्मध्वानन्दलहरी सादरमालोकिता। सरससाहित्यरीतिमवलंब्य रचितेयं निस्संशयं सहृदय-हृदयावर्जनं कुर्यादिति दृढं विश्वसिमि। श्रीयुतशास्त्रिणां कृतौ कापि विलक्षणा विलसति वर्णनाचातुरी। उत्प्रेक्षानैपुणी काचन निरुपमा जागर्ति। सर्वतोमुखं पाण्डित्यमाविष्कुर्वाणा वृत्तविन्यासवैखरी विशेषतो राजते। श्रीमदानन्दतीर्थगुरुवर्याणां प्रसादेन कृतिरेषा सर्वत्र प्रचयं प्राप्नुयादिति श्रीमध्वान्तर्गतं श्रीलक्ष्मीनरसिंहमभ्यर्थये।

व्यासाद्रिसरसनिस्सृत-
सुखमुनिगुरुराट्कथासुधालहरी।
भवतापशमनशीला
निषेव्यतां रामचन्द्रमतिमहिता॥

खापे. रामचंद्राचार्यः।

---



श्रीमदानन्दतीर्थभगवत्पादाचार्यः ।

शान्तः सर्वजनान् समीरयति यश्चैतः समुल्लासयं-
श्चण्डोद्दामगतिः प्रभञ्जयति चोद्दण्डान् प्रकाण्डानपि ।
सोऽसौ सर्वजगत् पुनाति पवनो नृत्यन्ति येनागमाः
सोऽयं मध्वमुनीश्वरो विजयते साक्षाज्जगत्पावनः ॥

॥ श्रीः ॥

# ॥ मध्वानन्दलहरी ॥



अस्ति प्रशस्तविभवा नगरी पवित्रा
कर्णाटकक्षितितलाभरणायमाना ।
यां रौप्यपीठनगरीति गिरन्ति सन्तो
रूप्यद्युतिप्रसरनिर्धुतकल्मषौघाम् ॥ ॥१॥

सत्याश्रयां सुकृतिभिः परिमृग्यमाणां
विश्वम्भरेण जगतीपतिनाऽभिरामाम् ।
नित्यं जयेन विजयेन च सेव्यमानां
यामामनन्ति विबुधा भुवि विष्णुलोकम् ॥ ॥२॥

तस्यां नगर्यां बहुवैभवायां
पाश्चात्त्यपाथोनिधितीरगायाम् ।
श्रीपाजकक्षेत्रपवित्रभूमा-
ववातरन्मध्वमुनिर्यमीन्द्रः ॥ ॥३॥

निखिलभुवनमध्ये भासमानोऽसमानः
सकलबुधकदम्बैः प्रार्थ्यमानावतारः ।

---

(१) रूप्यद्युतिः— रजतद्युतिः हनूमानित्यपि शब्दरत्नमाला ।

(२) जयः विजयश्च तन्नामकौ द्वारपालकौ जयत्रिशिष्टजयौ च ।

(४) बुधकदम्बैः— बुधानां देवानां प्राज्ञानां च गणैः । आद्यः

उपनिषद इवाद्यः पूरुषः पूर्णरूपो
हरिरलभत गर्भाद्वेदवत्याः प्रकाशम् ॥ ॥४॥

प्रासीदन्मरुतः प्रमोदमगमन् साङ्गाः समस्तागमाः
प्राप्तामोदभराः परं सुमनसः सद्यो विकासं गताः ।
श्रुत्याह्लादकरं शुकादिवचनं सम्प्राप पुष्टिं परां
मध्वाविर्भवनेन सर्वभुवनं जज्ञे प्रमोदाकुलम् ॥ ॥५॥

मिथ्यात्वभ्रमकल्पितत्वविरसत्वाद्यैरसत्कल्पनैः
श्रुत्युद्वेगकरैर्वचःक्रकचकैः कैश्चिद् वृथा दूषितम् ।
प्रासीदद्भुवनं स्वतत्वविदुपि द्वैतार्थधौरेयके
लोकानन्दकरे धरामवतरत्यानन्दतीर्थे मुनौ ॥६॥

---

पूरुषः— पुरुषोत्तमो जीवोत्तमश्च । हरिः— विष्णुः, हनूमांश्च । वेदवत्याः- मध्यगेहभट्टात् वेदवत्यामाविर्भूतः श्रीमदाचार्यः ।

(५) मरुतः—देवाः वायवश्च । साङ्गाः—शिक्षादिभिरङ्गैः सहिताः सावयवाश्च । समस्तागमाः— समस्ताश्च ते आगमाश्च सर्वे वेदाः समस्ताश्च ते अगमाश्च सर्वे तरवश्च । आमोदः— हर्षः परिमलश्च । सुमनसः— सहृदयाः पुष्पाणि च । श्रुतिः— वेदः श्रोत्रं च । शुकादिवचनम्— शुकादेः व्यासस्य शुकादीनां पक्षिणां च वचनम् । मध्वाविर्भवनम्— मध्वस्य मधोश्च आविर्भावः ।

(६) विरसत्वाद्यैः— मिथ्यात्वकृतं विरसत्वमत्र विवक्षितम् । श्रुत्युद्वेगः— वेदव्याकोपः; श्रवणवैरस्यं च ।

आदौ येन हनूमता सुकृतिना द्वैतार्थमात्माऽर्पितो
भीमेनापि ततश्चिराय चरितं द्वैताभिधाने वने ।
द्वैतार्थाभिरतः स एव भगवान् द्वैतं समुद्भासयन्
सर्वज्ञत्वमवाप्य भव्यजनुषा प्रादुर्बभूव स्वयम् ॥ ॥७॥

डोलायां निहितः समुत्सुकमना उत्तानशायी मुदा
हस्तादेश्चलनैर्निषेधगमकैरुच्चैः प्रहासैरपि ।
हुङ्कारादिभिरप्युदात्तनिनदैः खेलन्नसावर्भकः
सर्वाण्येव मतान्तराण्यवचनं निन्दन्निवाद्योतत ॥ ॥८॥

सङ्ख्याशब्दान् ललितवचनैः पाठयन्त्यां जनन्या-
मेकस्योक्तौ तदुपरिगतं द्वे इति प्रब्रुवाणः ।
क्रीडासक्तोऽप्ययमतिशिशुः स्वीयसिद्धान्ततत्त्व-
स्याद्योद्भेदप्रकटनमिव व्यादधानश्चकाशे ॥ ॥९॥

समस्तवस्तुप्रतिबोधहेतो-
र्जनैः प्रणम्रैरभिवन्दितस्य ।

---

(७) श्लोकेऽस्मिन् श्रीमदाचार्यस्यावतारत्रयेऽपि द्वैतसम्बन्धः प्रदर्श्यते । द्वैतार्थमात्माऽर्पितः— सीतारामरूपद्वन्द्वार्थमात्मा समर्पितः । द्विधा इतं द्वीतं ततः स्वार्थेऽणि द्वैतं द्वयमित्यर्थ इति हेमचन्द्रः । संछिन्नद्वैतसंशय इत्यत्र द्वैतशब्दो द्वयार्थक इति शब्दकल्पद्रुमः ।

(९) एकस्य— ' एकम् ' इत्यस्य सङ्ख्याशब्दस्य । उद्भेदः— अङ्कुरः । द्वे इत्ययं शब्दो द्वैतस्याङ्कुरत्वेन द्रष्टव्यः ।

(१०) अत्रत्यानि विशेषणानि सर्वाण्युभयसाधारणत्वेन द्रष्टव्यानि ।

आह्लादिनी तस्य बभूव बुद्धिः
प्रभेव भानोरुदयाश्रितस्य ॥ ॥१०॥

वेदांस्तदङ्गानि च तद्गुरुस्त-
मध्यापयामास यथाक्रमेण ।
वेदान्तवेद्याभिरतस्य तस्य
बभूव वेदान्तमयं समग्रम् ॥११॥

शिक्षातोऽक्षरतत्त्वमाशुगमनो मात्राविधिं छन्दसो
निर्वाच्यत्वमथो निरुक्तवचनात् तत्त्वं दिवो ज्योतिषात् ।
व्याकृत्या अपि नामरूपमखिलं कल्पाच्च यज्ञक्रमा-
नित्येवं निगमाङ्गतो विदितवान् वेदान्ततत्त्वान्ययम् ॥१२॥

अथाच्युतप्रेक्षगुरोरुपान्तं
वेदान्तविद्याधिगमाय पित्रा ।
निन्येऽरुणेनोज्ज्वलचारुकान्तिः
पूषेव पौरस्त्यगिरेः समीपम् ॥ ॥१३॥

गुरोरुपान्ते स्थितिमात्रभाजः
प्राग्जन्मसंस्कारविशुद्धबुद्धेः ।

---

(१२) अक्षरतत्वम्— अक्षराणामकारादिवर्णानां अक्षराख्यस्य पुरुषस्य च तत्वम् । आशुगमनः-वायुः । मात्रा— छन्दःशास्त्रप्रसिद्धोऽक्षरावयवः । मीयत इति व्युत्पत्त्या विषयश्च । दिवः-आकाशस्य ज्योतिषामिति यावत् , स्वर्गस्य च । नामरूपम्— सुबन्तरूपम्, नामरूपे व्याकरवाणीत्यादौ प्रसिद्धं नामरूपञ्च । यज्ञक्रमान्— यागविधीन्, विष्णोः पराक्रमांश्च ।

(१४) कलानिधेः— चन्द्रस्य, चतुःषष्टेः कलानां निधेश्च ।

दिने दिने वृद्धिमशिश्रियन्त
कलानिधेस्तस्य कलाः समग्राः ॥ ॥१४॥

तर्कः कर्कशतां विहाय यतिनं संसेवते सादरात्
साङ्ख्यं दर्शनमाततान पुरुषं सङ्ख्यावदग्रेसरम् ।
मीमांसाऽपि चकार मांसलमतिं योगोऽपि तं योगिनं
वेदान्तः पुनरेक एव यतिनो वादान्ततामागतः ॥ ॥१५॥

सामोदं गुरुतल्लजाच्छ्रुतिशिरस्तत्त्वान्यधीयन्नयं
वाचोयुक्तिभिरन्यभाष्यदलनं कुर्वन् स्वयं लीलया ।
आचार्यस्य बबन्ध कण्ठमभितः प्रश्नप्रसूनस्रजा
रुद्धात्मप्रसरश्च देशिकवरो जज्ञे भृशं विस्मितः ॥ ॥१६॥

गुरोरवाप्ता निगमान्तविद्या
तस्मिन् प्रसन्नात्मनि साधुवृत्ते ।
प्राप्यामृतत्वं नितरां चकाशे
पूष्णः प्रभा चन्द्रमसीव हृद्ये ॥ ॥१७॥

---

(१५) सङ्ख्यावदग्रेसरम्— विद्वदग्रेसरम् । वादान्तताम्-वादपर्यवसायिताम् ।

(१६) अधीयन्— इङ्धार्योः शत्रकृच्छ्रिणीति शतृप्रत्ययः । आचार्यस्य गुरोः अच्युतप्रेक्षाचार्यस्येति यावत् । देशिकवरः गुरुवरः अच्युतप्रेक्षाचार्यः ।

(१७) प्रसन्नात्मनि— प्रसन्नः आत्मा यस्य सः प्रसन्नरूपः, प्रसन्नः आत्मा यस्मिन् सः प्रतिपन्नात्मस्वरूपश्च । साधुवृत्त-सम्यग्वर्तुलाकारे साधुशीले च । अमृतत्वम् चन्द्रकिरणानाममृतमयत्वं प्रसिद्धमेव, अन्यत्र च मोक्षहेतुत्वमित्यर्थः ।

गुरोरसौ वारिनिधेर्गृहीतं
सारं स्वयं स्वादुरसं विधाय ।
क्षोणीतले मेघ इवाभिवर्षन्
स्वान्तं व्यधादुल्लसितं जनानाम् ॥ ॥१८॥

अद्वैतिनं द्वैतमतानुरक्तं
शैवं तथा वैष्णवमार्गसक्तम् ।
गुरुं वितन्वन्नमितप्रभाव-
श्चकार दुर्वर्णमसौ सुवर्णम् ॥ ॥१९॥

आचार्यवर्योऽप्यनसूयकः स-
न्नानन्दपाथोनिधिमग्नचेताः ।
द्वैतं मतं स्थापयितुं जगत्या-
मानन्दतीर्थं मुनिमाबभाषे ॥ ॥२०॥

गुरोराज्ञां धृत्वा शिरसि सुममालामिव नवां
प्रसूपित्रोः कृच्छ्रादनुमतिमवाप्य प्रमुदितः ।
गृहीत्वा संन्यासं सपदि तत एव व्रतिवरा-
द्ययौ तांस्तान्देशान् भुवनविदितप्राज्ञमहितान् ॥ ॥२१॥

---

(१८) गुरोः—महतः, विद्यागुरोश्च । सारम्—जलं सारभूतमंशं च । मेघपक्षे महतः वारिनिधेरित्यर्थः । श्रीमदाचार्यपक्षे तु गुरोः वारिनिधेरिति व्यस्तरूपकं द्रष्टव्यम् । महतः वारिनिधेः गृहीतं जलं मेघ इव विद्यागुरोः वारिनिधेर्गृहीतं सारं स्वयं स्वादुरसं विधायाभिवर्षन्नित्यर्थः ।

(१९) दुर्वर्णम्—रजतम्, दुष्टा वर्णाः यस्मिन्निति च । एवं सुवर्णमित्यत्रापि द्रष्टव्यम् ।

नास्तिक्यं सहसा ययौ क्षितितले नास्तित्वमेव क्षणाद्
बौद्धं चापि मतं नभोनलिनवद्बौद्धत्वमापद्यत ।
तीर्थे क्वापि निमज्जति स तरसा तैर्थङ्करीयं मतं
स्वेच्छादृष्टिहरे प्रभञ्जनवरे वातुं प्रवृत्ते सति ॥ ॥२२॥

सद्यः स्वस्य विशिष्टतां प्रविजहौ रामानुजीयं मतं
स्वस्याकारमगोपयद्भयवशाददैतमाशान्तगम् ।
प्रस्थानान्यपराणि चैवमभवन् प्रस्थानभाञ्जि क्षणात्
स्वेच्छादृष्टिहरे प्रभञ्जनवरे वातुं प्रवृत्ते सति ॥ ॥२३॥

माया निर्गलिता दिगन्तमगमन्मिथ्यात्ववार्ता भया-
दज्ञानं कुहचिन्न्यलीयत भिया कुत्राप्यविद्या गता ।
भ्रान्तिः शान्तिमवाप नैव धरणावध्यासवार्ता श्रुता
स्वेच्छादृष्टिहरे प्रभञ्जनवरे वातुं प्रवृत्ते सति ॥ ॥२४॥

---

(२२) बौद्धत्वम्— बुद्धिकल्पितपदार्थत्वम् । तैर्थङ्करीयं मतम्-जैनमतम् । स्वेच्छादृष्टिहरे– स्वच्छन्दावलोकननिरोधिनि, स्वेच्छया प्रवृत्तानां शास्त्राननुगृहीतानां दर्शनानां निरोधिनि च । प्रभञ्जनवरे- वायौ श्रीमदाचार्ये ।

(२३) रामानुजीयं मतम्— विशिष्टाद्वैतम्, तच्च स्वस्य विशिष्टतामुत्कृष्टतां विजहौ । स्वगतं विशिष्टत्वांशं परित्यज्य अद्वैतरूपेण परिणतमित्यपि द्रष्टव्यम् । अद्वैतञ्च अकारगोपनेन द्वैतमभवत् । स्वीयमाकारमगोपयदित्यपि द्रष्टव्यम् । प्रस्थानभाञ्जि- यात्राभाञ्जि, अपराणि प्रस्थानानि देशान्तरगमनाय प्रास्थितानीत्यर्थः ।

(२४) अस्मिन् श्लोके मतान्तरीयैरादृतानां जगन्मिथ्यात्वप्रतिपादनपराणां विविधानां पारिभाषिकशब्दानां निर्गलनादिकं वर्ण्यते।

प्रथमं दक्षिणं देशं दक्षिणोऽसौ समीरणः ।
भिक्षुरूपेण निरगाच्चक्षुरुन्मीलयन् नृणाम् ॥ ॥२५॥

सर्वज्ञेन सताऽपि तेन मुनिना सर्वज्ञवादः क्षतो
द्वैतार्थव्रतिना च वादसरणावद्वैतिता ख्यापिता ।
विष्णूपासनदेशिकेन निखिलो लोकः शिवे योजितो
भव्यानां कृतयश्चमत्कृतिभृतस्तन्वन्ति कौतूहलम् ॥२६॥

रत्नानि शास्त्राम्बुनिधेर्गृहीत्वा
व्याख्यानसंस्कारयुतानि कृत्वा ।
सन्दर्शयन् नैगमवर्त्मभाजां
सचेतसां चेत उपाददेऽसौ ॥ ॥२७॥

कश्चित् पुमानित्यवधीरितः पुरा
ततो महानित्यवधारितः शनैः ।
ततश्च वैकुण्ठपदाध्वभानुमा-
निति क्रमेणायमवेक्षितो जनैः ॥ ॥२८॥

स्यानन्दूरपुरं गतोऽथ यतिराड् यात्राप्रसङ्गक्रमा-
दृष्ट्वा तत्र यदृच्छया यतिवरं शृङ्गाद्रिपीठाधिपम् ।

---

(२५) दक्षिणः— दक्षिणदेशीयः, समर्थश्च । समीरणः- वायुः श्रीमदाचार्यः ।

(२६) सर्वज्ञः- पूर्णप्रज्ञः । सर्वज्ञवादः- बुद्धवादः । अद्वैतिता- अद्वैतानुसारिता, असदृशता च । शिवे-शम्भौ, मङ्गले च ।

(२७) नैगमवर्त्मभाजाम्— वेदवर्त्मानुसारिणाम्, वणिजां च ।

(२९) स्यानन्दूरपुरम्— अनन्तशयनम् । शृङ्गाद्रिपीठाधिपम्- " शृङ्गेरि " पीठाधिपम् ।

विश्वार्थातिशयप्रकाशनचणो भास्वान् स दिव्यौजसा
तेषां नैगममार्गहेयरुचितां व्यक्तीचकार क्षणात् ॥ ॥३४॥

पश्चान्मायामोहिनी धर्ष्यमाणा
जङ्घाशक्तिं दर्शयामास सद्यः ।
मायामुक्ता साऽपि काञ्ची सरला
क्षिप्रं भिक्षोः पादमूले पपात ॥ ॥३५॥

मासान् बहून् दक्षिणदिग्विभागे
सञ्चारपूतान् स विधाय देशान् ।

---

विश्वार्थातिशयप्रकाशनचणः विश्वेषामर्थानामतिशयेन प्रकाशने प्रसिद्ध इति सूर्यपक्षे, विश्वशब्दस्य नानाविधानामर्थानां प्रकाशने वर्णने प्रसिद्धइति श्रीमदाचार्यपक्षे । श्रीमदाचार्यः पयस्विनीतटं गतस्तत्रत्यैः पण्डितैः आक्षिप्तः सभायां विष्णोर्नाम्नामाद्यस्य विश्वशब्दस्य विविधानर्थान् वर्णयन् तान् विजिग्यइति मध्वविजयः । पयस्विनीतटं च काञ्चीपुरीत्यभियुक्ताः । केरलदेशस्था पयस्विनी तावदन्यत्र मध्वविजये प्रस्तुता । नैगममार्गहेयरुचिताम्— नैगमानां वेदविदां मार्गे हेया रुचिः अभिष्वङ्गः येषामिति काञ्चीगतपण्डितानां पक्षे । नैगमानां वणिजां मार्गे हेया रुचिः कान्तिः येषामिति काञ्चीगतरत्नपक्षे । भास्वत्प्रभायां रत्नानामुत्कर्षोऽपकर्षो वा ज्ञायत इति लोकतः सिद्धम् ।

(३५) जङ्घाशक्तिं दर्शयामास—पलायत । पलायनसंरम्भे च तन्मुक्ता काञ्ची भिक्षोः पादमूले पपातेत्यर्थः ।

पश्चादुदीचीं ककुभं प्रतस्थे
पौषे विवस्वानिव दीप्ततेजाः ॥ ॥३६॥

महसां पतिमुत्तरां दिशं
परिवृत्तं समवेक्ष्य योगिनम् ।
मुदिताः खलु तत्र मेनिरे
त्रिदिवद्वारमपावृतं जनाः ॥ ॥३७॥

सहस्रशस्तत्र महीपतीनां
स उत्तमाङ्गानि नतानि भिक्षुः ।
स्वपादधूलीनिकरैः पवित्रै-
रनुत्तमाङ्गानि चकार सद्यः ॥ ॥३८॥

गोदावरीतीरगतस्ततोऽसौ
गोष्ठ्यां महापण्डितमण्डितायाम् ।
षड्दर्शनीं दुर्नयदूपिताङ्गीं
वाग्वर्षधारास्नपितां वितेने ॥ ॥३९॥

ततः स शृङ्गाद्रिमुपेत्य भिक्षु-
रद्वैतमालोकत काननान्ते ।

---

(३७) त्रिदिवद्वारमपावृतम्— भास्करे उत्तरायणं गते स्वर्गद्वारमपाव्रियत इति प्रसिद्धम् ।

(३८) उत्तमाङ्गानि— शिरांसि । अनुत्तमाङ्गानि—न उत्तमाङ्गान्यनुत्तमाङ्गानीति विरोधः, न विद्यन्ते उत्तमान्यङ्गानि येभ्यस्तानीति परिहारश्च द्रष्टव्यः ।

(४०) हर्यक्षः—सिंहः, हरी अक्षि यस्य स इति विग्रहेण विष्णुतत्व-

हर्यक्षसञ्चारभयादिवात्र
कृतात्मरक्षं निगमान् विहाय ॥ ॥४०॥

वीरोऽयं वादगोष्ठीषु दर्शयन् भीमविक्रमम् ।
अद्वैतस्य शिरश्छित्त्वा द्वैतं चक्रे प्रतिष्ठितम् ॥ ॥४१॥

अद्वैतं द्वैततां यातं तस्याकारविलोपनात् ।
तस्यादिरहितस्यैवमनादित्वं दृढीकृतम् ॥ ॥४२॥

अन्येषां सुदुरुद्धरां मितिशिलामादाय वेदावने-
रायान्तं तमवेक्ष्य माध्वसवशादात्माभिरक्षेच्छया ।
रज्जुर्या विषसर्पिणी भयकरी सा मुक्तमायातनुः
स्वं रज्जुत्वमगात् तयैव मुनिनाऽवध्यन्त मायाविनः॥४३॥

त्यक्त्वाऽन्यानि मतानि जातकरुणः स्वीयप्रतिद्वन्द्विनो
मायावादमतङ्गजस्य सुदृढं कुम्भस्थलं भञ्जयन् ।

---

दर्शी श्रीमदाचार्यश्च । हर्यक्षसञ्चारभयेन निगमान् विहाय वनान्तं प्रविश्य कृतात्मरक्षामिव स्थितं अद्वैतमालोकतेत्यर्थः ।

(४१) अद्वैतस्य शिरश्छित्वा शिरःस्थानीयमकारं छित्वेत्यप्यर्थः ।

(४२) आदिरहितस्य अकाररहितस्य अद्वैतस्य तथाच द्वैतस्य अनादित्वं व्यवस्थापितम् । अथवा अद्वैतस्य अनादित्वं परैरुच्यमानं तस्याद्यक्षररहितत्वकृतमिति व्यवस्थापितमित्यर्थः ।

(४३) मितिशिला— मितिरेव शिलेति रूपकम्, प्रमाणशिलेत्यर्थः । श्लोकेऽस्मिन् मायावादिभिरुपन्यस्यमानो रज्जुसर्पदृष्टान्तो विपर्यीकृतः ।

(४४) हरिवरः— सिंहः श्रीमदाचार्यश्च । माध्वमित्यस्य सिंहपक्षे

**मायाध्वंसनमित्यतः पदयुगादाद्यक्षराभ्यामसौ**
**मन्ये विक्रमतत्परो हरिवरो 'माध्वं' पदं निर्ममे ॥ ॥४४॥**

**आत्मद्वैतवृषप्रचारणकृते दण्डं श्रितेनामुना**
**भग्नेऽतत्वमसीति वेदविपिनावस्कन्दिनि द्वीपिनि ।**
**हर्षं प्राप वृषः प्रसादमतुलं भेजेऽखिलं गोकुलं**
**गोपालोऽपि परं प्रहृष्टहृदयो गोरक्षणे व्यापृतः ॥ ॥४५॥**

**दृष्ट्वाऽखिलान् द्वैतकृतान्तविद्वान्**
**विपक्षसिद्धान्तभटान् प्रचण्डान् ।**

---

लक्षणया उत्कृष्टमित्यर्थो द्रष्टव्यः । अद्वैतस्य द्वैतप्रतिद्वन्द्वित्वेन मायावादस्यापि तथात्वं स्पष्टमेव ।

(४५) आत्मद्वैतवृषप्रचारणकृते— जीवात्मपरमात्मनोः भेदप्रतिपादनरूपः योऽसौ द्वैतधर्म एव वृष इति श्लिष्टरूपकम् । वृषः धर्मो वृषभश्च । प्रचारणकृते प्रख्यापनार्थं प्रचारभूमिनयनार्थं च । वृषप्रचारणे दण्डस्यावश्यकता द्रष्टव्या । द्वीपिनि— तत्वमसीति वाक्यं द्वैतवृषशत्रुत्वात् द्वीपित्वेन रूपितम् । तस्य च अतत्वमसीत्येवं रूपेण च्छेदः । भग्ने तत्वमसीत्यत्र तन्त्रेण 'तत्वमसि' 'अतत्वमसि' इत्येवं द्वेधा पदविभागेन तत्वमसीत्ययं द्वीपी अतत्वमसीत्येवं भग्न इत्यर्थः । वृषः-वृषभो धर्मश्च । गोकुलं गवां वाचां च समूहः । वेदवाचः सर्वाः प्रसादाख्यगुणयुक्ताः सञ्जाता इत्यर्थः । गोपालः-गवां पालकः, श्रीकृष्णश्च । गोरक्षणम्-गवां धरायाश्च रक्षणम् । अत्र श्रीमदाचार्यस्य भगवत्कार्यसाधकत्वं सूचितं भवति ।

यतिर्जयस्तम्भचयान् समन्ता-
दचीखनत् स्वीययशःपताकान् ॥ ॥४६॥

वेदान्तकान्तारचरः समन्तात्
स्वीयौजसा निर्धुतसर्वसत्त्वः ।
वादीभसिंहः प्रकटप्रभावो
वेदान्तभद्रासनमारुरोह ॥ ॥४७॥

शान्तेषु वैमत्यजुषां व्रजेषु
समेत्य शिष्यैः सह रौप्यपीठम् ।
स सर्वलोकं भविकाभिवृद्ध्या
संयोजयन्नेवमुदाजहार ॥ ॥४८॥

अस्माभिरात्तकरुणैः सुपरीक्षितानि
सर्वाणि भाष्यकलितानि मतान्तराणि ।
नैतेषु किञ्चिदपि साधुतमं समस्ति
स्थालीपुलाकवदुदाह्रियतेऽयमर्थः ॥ ॥४९॥

श्रुतीनां तात्पर्यं यदि भवति मिथ्यात्वकथने
तदा तन्मिथ्यात्वं प्रसजतितरां वेदवचसाम् ।
जडोऽप्येवं दध्यान्न खलु परशुं स्वस्य शिरसि
स्वयं स्वस्य ध्वंसं कलयतु कथं वेदपुरुषः ॥ ॥५०॥

---

(४६) कृतान्तः— यमः सिद्धान्तश्च ।

(४७) निर्धुतसर्वसत्त्वः— निर्जिताखिलमृगः, निर्जिताखिलबलश्च ।
भद्रासनम्— सिंहासनम् ।

नित्यं शुद्धे वस्तुनि ब्रह्मरूपे
येन भ्रान्तिः कल्प्यते लोकसृष्ट्यै ।
तस्मिन्नेव भ्रान्तिरेषा प्रसिध्य-
त्यात्मब्रह्माद्वैतभावप्रसङ्गात् ॥ ॥५१॥

यद्यप्यन्ये विष्णुमार्गाश्रयित्वात्
संलक्ष्यन्ते द्वैतसत्पक्षभाजः ।
भेदाभेदाद्यात्मकैः पक्षभेदै-
रेते तावद्वस्तुतः शून्यपक्षाः ॥ ॥५२॥

एवं विचारपदवीमधिरुह्य सम्यक्
तत्तद्विवादविषये परिभाव्यमाने ।
दोषान्धकारगहनानि भवन्त्यमूनि
तस्मादिमं श्रयत राजपथं विशालम् ॥ ॥५३॥

" निर्णीयते सकलशास्त्रविलोडनेन
तत्त्वद्वयं सकललोकनिषेवणीयम् ।

---

(५२) अन्ये— विष्णुपारम्यवादिनो मतान्तरीया विवक्षिताः । विष्णुमार्गाश्रयित्वात्-वैष्णवमार्गाश्रयित्वात्, आकाशाश्रयित्वाच्च । द्वैतसत्पक्षभाजः-द्वैतात्मकं सत्पक्षं भजन्तीति तद्भाजः, युक्तरूपपक्षद्वयभाजश्च । पक्षभेदैः-भेदः अभेदः, भेदाभेद इत्येतैः परस्परविरुद्धैः पक्षभेदैः, पक्षभङ्गैश्च । शून्यपक्षाः-शून्यः शून्यवादः पक्षः येषामिति विग्रहेण शून्यवादपक्षीयाः, पक्षहीनाश्च । अत्र विशेषणानां बलात्-अन्येषां विष्णुमार्गाश्रयित्वेन पक्षवत्त्वप्रतिभासेऽपि वस्तुतः पक्षभङ्गात् पक्षहीनत्वमभिव्यज्यते । तेन तेषां द्युलोकपतनासाम[illegible]

विष्णुः समस्तजगतामधिपः स्वतन्त्र-
स्तद्भिन्नवस्तु तदधीनतयाऽस्वतन्त्रम् ॥ ॥५४॥

जीवात्मनोऽखिलपतेः परमात्मनश्च
भेदो मिथः सकलशास्त्रगणैरुदीर्णः ।
तस्मादभेदकथनप्रतिभासि वाक्यं
व्याख्येयमेतदनुकूलतया समग्रम् ॥ ॥५५॥

नाजः कदाऽपि गजतां न पिकः शुकत्वं
काशोऽपि नैव कुशतां न घटः पटत्वम् ।
जीवोऽपि नैव लभते परमात्मभावं
मायासहस्रजटिलैरपि तर्कजालैः ॥ ॥५६॥

"सत्यं भिदा" जगदिदं न विवर्तरूपं
सत्या श्रुतिः सकलजीवगणाश्च सत्याः ।
सत्या भिदा घटपटादिषु दृश्यमाना
नासत्यमस्ति तु विना मतमन्यदीयम् ॥ ॥५७॥

कामं हरो भवतु शङ्कर ईश्वरो वा
गङ्गाधरो भवतु चन्द्रकलाधरो वा ।
नास्माकमस्ति विषयेऽत्र विवादलेशः
सर्वोत्तमस्तु भगवान् हरिरेक एव ॥ ॥५८॥

सोऽयं हरिर्निखिलवेदवचोऽधिगम्यः
सर्वातिगः सकलसद्गुणसान्द्रमूर्तिः ।
ब्रह्मादयः सुरगणा मनुजाश्च सर्वे
तस्यैव दासपदवीमनिशं भजन्ते ॥ ॥५९॥

संसारबन्ध इह देहभृतामनादि-
विच्छित्तिरस्य भविता भगवत्प्रसादात् ।
तस्य प्रसादनविधाविह तत्त्ववित्ति-
र्भक्तिश्च साधनमिति प्रथितं रहस्यम् ॥ ॥६०॥

मुक्तिः सुखैकनिलये परमात्मधाम्नि
दुःखाभिभूतिरहितस्वसुखानुभूतिः ।
मुक्तावपि स्वगतकिङ्करतादियुक्तो
भोगानुपाच्छति हरिं वरिवस्यमानः ॥ ॥६१॥

अक्षादिकं त्रितयमेव मतं प्रमाण-
मेतेन तत्त्वमखिलं परिमार्गणीयम् ।
तत्र त्वथो निगमवाक्यविरोधिता चे-
न्नाक्षं नचाप्यनुमितिर्भवति प्रमाणम् ॥ ॥६२॥

मर्त्यस्य चक्रिपदवीगमनोत्सुकस्य
चक्रेण मुद्रणमवश्यमिहैव कार्यम् ।
मुद्रां विना गतवतः पथिकस्य तत्र
लोकान्तरे नहि भवेत् सुलभः प्रवेशः" ॥ ॥६३॥

इत्थं यतेः स्वीयमतप्रचार-
मातन्वतो गाः परिपातुकामः ।

---

(६२) अक्षम्—प्रत्यक्षम् ।

(६३) चक्रिपदवी–विष्णुलोकः । गृहीतमुद्रस्यैव पथिकस्य देशान्तर- इव लोकान्तरेऽपि प्रवेशः सुलभः स्यादिति भावः ।

(६४) गाः—वाचः । अत्र गोपालबालस्य गवां परिपालनार्थमागमनं युक्तमुत्पादयता कविना गो[illegible]

गोपालबालस्तरणिं प्रविश्य
समागमद् द्वारवतीप्रदेशात् ॥ ॥६४॥

स्वप्ने च तस्यागमनं विदित्वा
गत्वा समुद्रस्य तटं यमीन्द्रः ।
सांयात्रिकाद्गोपशिशुं गृहीत्वा
त्रैलोक्यमप्यात्मवशं निनाय ॥ ॥६५॥

लोको यत्पदमाचिनोति महता क्लेशेन नक्तन्दिवं
सोऽयं त्वत्पदमूलमादरवशात् सम्प्राप्तवान् केशवः ।
कान्तत्वं त्वयि वर्तते यदि मुने लोहः समाकृष्यतां
श्रीकान्तो ननु गोपिकाधृततनुः कान्तेन कृष्टः कथम् ॥

भक्तिर्ज्ञानमिति द्वयेन कृतिनो गच्छन्ति विष्णोः पदं
नो कश्चित् कुहचिच्छ्रुतो यतिपते यत्पार्श्वमागाद्धरिः ।
केन ब्रूहि चराचराखिलगुरुस्त्वत्पार्श्वमभ्यागतः
प्राप्तः कुत्र कुतः कदा कथमसावाकृष्टिमन्त्रस्त्वया ॥६७॥

काषायेण हृतः किमात्ममविधं का शक्तिरस्याथवा
किं दण्डेन हृतः स गोपशिशुकः किं तस्य दण्डाद्भयम् ।
किं वा मन्त्रबलेन ते वशमगान्नैतत्क्वचिच्छ्रूयते
किं वा ते तपसा हृतस्तदपि नो दृष्टं श्रुतं वा क्वचित् ॥६८॥

(६६) कान्तत्वम्—अयस्कान्तत्वम्, आवर्जकत्वं च । लोहः-अयः, वित्तं च । श्रीकान्तः-श्रीयुक्तः अयस्कान्तः लक्ष्मीकान्तश्च । गोपिकाधृततनुः- गोपस्त्रीभिः गोपीचन्दनेन वा धृता तनुः यस्येति द्रष्टव्यम् ।

ग्रन्थानुपर्युपरि यः प्रणयन् द्युलोक-
सोपानमार्गमिव मध्वमुनिर्बबन्ध ॥ ॥७३॥

तमोवशादेकतया प्रतीतं
द्वैतप्रपञ्चं परमो यमीन्द्रः ।
तत्त्वप्रदीपोज्ज्वलभाष्यभासा
प्राचीकटत् पञ्चभिदाभिरामम् ॥ ॥७४॥

सौवर्णानि महार्थभाञ्जि भगवत्सूत्राणि संयोज्य यः
शुद्धैः शास्त्रमहोदधेरधिगतैस्तत्त्वोक्तिमुक्ताफलैः ।
हारं ग्रन्थमरीरचद्यतिवरः सर्वातिशायिप्रभं
यं कण्ठे दधदेष शिष्यनिचयो हारी समिन्धेतराम् ॥७५॥

व्यासोपक्रमसूत्रबीजनिवहं भाष्याणुभाष्यादिना
सिञ्चन्नङ्कुरयंस्ततः किसलयन् वृक्षत्वमापादयन् ।

---

(७४) त्रिविक्रमपण्डिताचार्यविरचितेन तत्वप्रदीपेन तन्नाम्ना व्याख्यानेन उज्वलया भाष्यभासेति द्रष्टव्यम् ।

(७५) सौवर्णानि—सुवर्णमयानि, शोभनैः वर्णैरक्षरैः घटितानि च। महार्थभाञ्जि–अर्थगौरवयुक्तानि महार्घाणि च। हारम्–हरिशब्दादणप्रत्यये रूपम्· हरिसम्बद्धं, मुक्ताहारं च । हारं ग्रन्थम्–हरिसम्बद्धं ग्रन्थम्, ग्रथ्यतइति व्युत्पत्या मुक्ताहाररूपां मालां च। हारी–हारवान्, मनोहरश्च । ‘भक्तिर्हरौ तत्पुरुषे च सख्यं तदेव हारं वद मन्यसे चेत्’ इति भागवत प्रयोगे हारं हरेश्चरितमिति श्रीधरः ।

(७६) श्रेयः–अभ्युदयः, निश्रेयसं च, ‘श्रेयो निश्रेयसामृते’ इत्यमरः ।

सत्पुष्पैः सरसैः फलैश्च घटयन् श्रेयःप्रधानैरसौ
मध्वाचार्ययमीश्वरः सहृदयानानन्दयत्यञ्जसा ॥ ॥७६॥

भिक्षो त्वदीयवचनानि वचोऽतिशायि-
मन्त्रप्रभावकलितानि भवन्ति नूनम् ।
यत् त्वं स्वशिष्यनिवहं पुरुभक्तिभाजं
मुक्तात्मतां नयसि ते वचसां प्रभावैः ॥ ॥७७॥

अन्यैस्त्वदीयवचनं सुधया समान-
माख्यायते परमिदं न विचारचारु ।
यत्ते वचांसि परिभूतसुधारसानि
मर्त्यानमर्त्यपदभाजनतां नयन्ति ॥ ॥७८॥

मितिपदादुपमाननिराकृते-
रुचितचारुपदन्यसनादपि ।
उभयथा कृतयस्तव संयमिन्
निरुपमानतया विचकासति ॥ ॥७९॥

शब्दार्थभावनापूर्वकल्पनाश्रुतिभूषिताः ।
कृतयो रमणीयास्त्वामाहुर्मीमांसकं गुरुम् ॥ ॥८०॥

---

(७७) मुक्तात्मताम्— मुक्ताफलस्वरूपताम्, मुक्तस्वरूपतां च ।

(७९) मितिपदात्— प्रमाणपदव्याः । उपमाननिराकृतेः-उपमाना-ख्यस्य प्रमाणस्य निराकरणात् । उपमानस्य परैरङ्गीकृतस्य प्रमाणत्वेनानभ्युपगमादित्यर्थः ।

(८०) शब्दार्थभावना— शाब्दी आर्थी च भावना, अदृष्टकल्पना, श्रुतिः एताभिः भूषिता इति मीमांसापक्षे, शब्दार्थयोः भावना

यो देवताप्रत्ययवृद्धिकारी
कर्तुः स्वतन्त्रत्वविधौ प्रसिद्धः ।
यश्चागमादेशविधानदक्षः
स त्वं ध्रुवं व्याकरणस्य कर्ता ॥ ॥८१॥

चिरेण वन्ध्यत्वमुपेयिवांसः
शाखिव्रजाः पुष्पदशावरुद्धाः ।
फलैस्त्वया सङ्घटिता नमन्ति
त्वद्धस्तविन्यस्तशिरःप्रदेशाः ॥ ॥८२॥

---

विचारः, अभिनवकल्पना, श्रुतिः, एताभिः भूषिता इति श्रीमदाचार्यकृतिपक्षे । मीमांसकः-मीमांसाशास्त्रज्ञः, विचार दक्षश्च । गुरुः-मीमांसाशास्त्रप्रवर्तकः आचार्यश्च । एतत्कृतेः ग्रन्थैरस्य विचारदक्षत्वं स्फुटमवगम्यत इति पर्यवसितोऽर्थः ।

(८१) देवताप्रत्ययवृद्धिकारी-सास्य देवतेत्यादिना विहिताः तद्धिताः देवताप्रत्यया इत्युच्यन्ते । तान् वृद्धिं च करोतीति तत्कारीति व्याकरणपक्षे देवताविषयकज्ञानवृद्धिकारीत्याचार्यपक्षे । कर्तुः स्वतन्त्रत्वविधौ- स्वतन्त्रः कर्तेत्यनेन कर्तृकारकस्य स्वतन्त्रत्वं विधीयते व्याकरणे । जगत्कर्तुः स्वतन्त्रत्वमाचष्टे श्रीमदाचार्यः। आगमादेशविधानदक्षः-आगमानामादेशानां च विधाने दक्ष इति व्याकरणपक्षे. आगमानां वेदानामादेशस्य आज्ञाया विधानेऽनुसरणे दक्षइति श्रीमदाचार्यपक्षे । व्याकरणस्य- शब्दागमस्य व्याख्यानस्य च ।

(८२) शाखिव्रजाः— वृक्षाणां वेदानां च समूहाः । पुष्पदशाव-रुद्धाः- पुष्पावस्थावरुद्धाः, परैः 'यामिमां पुष्पितां वाचम्'

परेणोच्चैः पुंसा कपटमृगतृष्णाकुलधिया
　कृतो यः सम्मोदाच्छ्रुतिपतितकान्तोक्तिवशिना ।
गुरोः शोकात् तस्माद् द्रुतमवनिजाता हनुमता
　परित्राता दिष्ट्याऽगणितनिजदुःखेन कृतिना ॥ ॥८३॥

दोषाकरत्वविरहेऽपि कलानिधित्व-
　मभ्यूह्यतेऽस्य कुमुदाश्रयतां गतस्य ।

---

इत्याद्युक्तिभिः पुष्पितत्वेनास्थिताश्च । त्वद्धस्तविन्यस्तशिरः-प्रदेशाः-फलभरेण नम्रास्तरवः हस्तावचेयफलाः संवृत्ता इति वृक्षपक्षेऽर्थः। आचार्यपक्षे तु-वेदानां शिरःप्रदेशो नाम वेदान्तः, वेदाः वेदान्तभारं श्रीमदाचार्यहस्ते निक्षिप्तवन्त इति ज्ञेयम् ।

(८३) परेणोच्चैः पुंसा — परमपुरुषेण श्रीरामेण, परमतवादिना च। कपटमृगतृष्णाकुलधिया-कपटरूपे मृगे या तृष्णा तया आकुला धीः यस्य सः, कपटरूपा या मृगतृष्णा तया आकुला धीः यस्य स च । श्रुतिपतितकान्तोक्तिवशिना— कर्णं प्रविष्टा या कान्तायाः सीताया उक्तिः तद्वशिना, वेदपतिताः याः कान्ताः रम्याः आपातरमणीया इत्यर्थः उक्तयः तत्वमसीत्यादि वाक्यानि तद्वशिना च । अवनिजाता सीता अवनिजाताः मर्त्याः । एतदानुगुण्येन परित्राता परित्राताः इति द्वेधा पदविभागो द्रष्टव्यः । हनुमता-आञ्जनेयेन श्रीमदाचार्येण च ।

(८४) दोषाकरः— निशाकरः दोषाणामाकरश्च । कलानिधिः-चन्द्रः, चतुःषष्टेः कलानां निधिश्च । कुमुदाश्रयः—कुमुदानामाश्रयः, कोः भूमेः मुदः प्रीतेः आश्रयश्च । विबुधान्-

स्वीयोदयेन यदयं विबुधान् धिनोति
यस्माच्च तानमृतमाशयति द्विजेन्द्रः ॥ ॥८४॥

गभीरे शास्त्राब्धौ भ्रमदुरवगाहोर्मिजटिले
महामोहापन्नेष्वनधिगतपारेषु बहुषु ।
भवान् पारं प्राप्तः कथमिव च सम्मोहरहितः
कियानम्भोराशिस्तव पुनरसौ वायुजनुषः ॥ ॥८५॥

कान्तारेषु शिलोच्चयेषु विपिनेष्वारामकुञ्जाद्रिषु
प्राकारेषु जलाशयेषु तटिनीष्वन्येषु दुर्गेष्वपि ।
स्वच्छन्दं चरतः प्रभञ्जन तव द्यावापृथिव्योः समं
सञ्चारः कथमत्र वेदगहने व्याहन्यतां कुत्रचित् ॥ ॥८६॥

योऽसौ द्वैतवृषस्य वेदगहने लीनस्य बुध्वा गतिं
गत्वा तत्र विलोक्य तं परिचरं दण्डी परिव्राजकः ।
श्रुत्यन्तेन निगृह्य तं क्षितितले सञ्चारयन् लीलया
चक्रे कस्य मनो न विस्मयपदं गोपालबालाग्रणीः ॥८७॥

---

देवान् विदुषश्च । अमृतम्-पीयूषं, निश्रेयसं च । द्विजेन्द्रः-द्विजराजः, ब्राह्मणश्रेष्ठश्च ।

(८५) भ्रमदुरवगाहोर्मिजटिले— भ्रमा एव दुरवगाहा ऊर्मयः तैः जटिले भ्रमैः आवर्तैः युक्ताः दुरवगाहा ऊर्मयः तैः जटिले च ।

(८७) द्वैतवृषस्येति श्लिष्टरूपकम्, वृषो नाम धर्मो वृषभश्च । परिचरम्-परितो धावन्तम्, सर्वतो व्याप्तं च, द्वैतधर्मं सर्ववेदप्रतिपाद्यं विलोक्येत्यर्थः । दण्डी-दण्डवान्, यतिश्च । परिव्राजकः-परितो धावन् वृषभेण सहेत्यर्थः, परितः परीक्षमाणश्च

चार्वाकादिकृतान्तदावदहनज्वालावलीढागमा-
रण्यक्षोणितले शरीरिशरणे निर्दह्यमाने भृशम् ।
आनन्दाभिधतीर्थनिःसृतपृथुद्वैतामृतस्रोतसा
सन्तापः शमितः समस्तजगतामानन्दमातन्वता ॥ ॥८८॥

मध्वानन्दयतीश सर्वजगतीचेतःसमावर्जक
ध्वान्तत्वं त्वयि वर्ततां परमतस्यान्धत्वसम्पादनात् ।
कान्तोऽसीतरदुर्लभामुपगतस्त्वं शान्तदान्तात्मतां
सर्वाकारमनोहरोऽसि जगतामत्यद्भुतोऽसि प्रभो ॥८९॥

कीशत्वं प्रथतेतरामधिगते दुर्गामशोकावनिं
भीमत्वं च परोरुभङ्गनिरते सुस्पष्टमेव त्वयि ।
मायारित्वमिदं च ते स्फुटमभूत् पूर्वावतारद्वये
तस्मात् त्वां कलयन्ति साधु भगवन्नाचावतारत्रयम् ॥९०॥

---

यतिः सर्वं वेदं परीक्षमाण इत्यर्थः । श्रुत्यन्तेन-कर्णान्तेन, वेदान्तेन च । गोपालबालाग्रणीः-गोपालबालाग्रेसरः, गोपाल-बालः अग्रणीः यस्येति विग्रहेण विष्णुसर्वोत्तमत्वप्रतिपादकः श्रीमदाचार्यश्च ।

(८८) तीर्थम्— जलाशयः, गुरुश्च ।

(८९) अत्र मध्व, आनन्द, यतीश, सर्वजगतीचेतःसमावर्जक, इत्येतेषु पदेषु यथाक्रमं ध्वान्तत्व, दान्तत्व, शान्तत्व, कान्त-त्वानि विशेषतो द्रष्टव्यानि ।

(९०) कीशत्वम्— कपित्वम् । अधिगते-कर्तरि क्तः, हनूमत्पक्षे-प्राप्तवति, श्रीमदाचार्यपक्षे तु-विदितवति । दुर्गाम्-दुष्प्रापां,

भारतीरमणतामुपेयिवा-
नक्षदोषकृतमात्मनोऽशुभम् ।
अञ्जसैव रिपुवर्गनिग्रहात्
सञ्जहार मरुदात्मसम्भवः ॥ ॥९१॥
आहवेषु पिशिताशनक्रमं
वारयन् कलिमलेन दूषितम् ।

---

दुर्ज्ञानां च । अशोकावनिम्– अशोकवनिकाम्, शोकरहितं स्थानं च विष्णुलोकमिति यावत् । परोरुभङ्गः- परस्य शत्रोः ऊरुभङ्गः, परेषां परमतवादिनामुरुभङ्गश्च । मायारित्वं-पूर्वावतारद्वये शत्रुगतमायारित्वं अस्मिन् जनुषि तु परमतगतमायारित्वमिति विवेकः ।

(९१) अस्मिन् श्लोके हनूमद्भीमश्रीमदाचार्या वर्ण्यन्ते । तदनुरोधेन त्रयोऽर्था द्रष्टव्याः । भारतीरमणत्वं मुख्यप्राणस्य प्रसिद्धमेव । भीमश्च भारत्याः कथायाः नायकः । श्रीमदाचार्यश्च वाणीरमणः । अक्षशब्देन यथाक्रमं अक्षकुमारः अक्षक्रीडा इन्द्रियाणि च ग्राह्याणि । रिपुवर्गः-शत्रुसमूहः, कामक्रोधादिषड्वर्गश्च । अक्षकुमारस्य अक्षक्रीडायाश्च दोषेण कृतं स्वस्याशुभं शत्रुसमूहनिग्रहेण परिहृतवान् हनूमान् भीमश्च । इन्द्रियदोषकृतं जीवात्मनोऽशुभं षड्वर्गनिग्रहमुपदिश्य संहृतवान् श्रीमदाचार्यः । अस्मिन्नर्थे ल्यब्लोपे पञ्चमी द्रष्टव्या । अत्रात्मशब्देन पूर्णप्रज्ञादन्ये जीवात्मानो विवक्षिताः । मरुदात्मसम्भवः-हनूमान् भीमः श्रीमदाचार्यश्च ।

(९२) अस्मिन्नपि श्लोके हनूमद्भीमश्रीमदाचार्यपरास्त्रयोऽर्था द्रष्टव्याः । आहवेषु-युद्धेषु यज्ञेषु च । पिशिताशनक्रमम्-पिशिताशना-

पिष्टमेव पिशितं व्यधादयं
मारुतिः परपदं विदन् स्वयम् ॥ ॥९२॥

आदौ येन हरीश्वरा उपकृताः सञ्जीवनेन त्वया
निर्धूताश्च ततो यया स्वगदया मायाविनः शत्रवः ।
ताभ्यामेव वचोमयत्वमधुना सम्प्रापिताभ्यां त्वया
सन्त्राताः प्रथमे परे तु परुषं कुण्ठत्वमापादिताः ॥ ॥९३॥

भ्रान्तिक्षिप्ते दुर्भरे दुःखहेतौ
द्वैतस्कन्धेनोद्धृते विष्टपेऽस्मिन् ।

---

नां राक्षसानां मांसाशिनां दुष्टानामिति यावत् । दुर्योधनादीनां चाक्रमणम् । श्रीमदाचार्यपक्षे तु पिशिताशनस्य मांसाशनस्य विधिमित्यर्थः, यज्ञेषु प्राणिहिंसायाः निषिद्धत्वादिति भावः । कलिमलेन- कलहस्य कलिकालस्य च दोषेण । **पिष्टमेव पिशितं व्यधात्** शत्रूणां पिशितं पिष्टमेव चकारेति, यज्ञेषु पिशितस्थाने पिष्टमेवाकल्पयदिति चार्थः । **मारुतिः**— हनूमान्, भीमः, श्रीमदाचार्यश्च । **परपदं विदन्**-परेषां शत्रूणां व्यवसितं जानन्, उत्कृष्टं स्थानं च जानन्; यागेषु प्राणिहिंसानिरोधेन पिष्टपशुकल्पनेन च जनानां परलोकप्राप्तौ व्याघातो न स्यादिति जानन्निति यावत् ।

(९३) **हरीश्वराः**-कपीश्वराः । **मायाविनः**-कापटिकाः । **प्रथमे**—हरीश्वराः, हरिः ईश्वरः येषामिति विग्रहेण हरिभक्ता इत्यर्थः । **परे**-मायाविनः, मायावादिन इत्यर्थः ।

(९४) **भ्रान्तिक्षिप्ते**— भ्रान्तौ मिथ्यामतौ भ्रमणे च क्षिप्ते । जगदिदं मिथ्यामतौ क्षिप्तत्वात् अशेषाणां भ्रमणे क्षिप्तत्वात्

नैकः शेषः किन्त्वशेषोऽपि ताव-
ल्लब्धाश्वासस्त्वां कृतार्थः स्तवीति ॥ ॥९४॥

शास्त्राब्धेर्मथनेन पूर्वमभवन्वस्तूनि यानि क्रमा-
दन्यैस्तानि हृतानि तृप्तहृदयैरेकैकशः सादरम् ।
आविर्भूतमथान्ततो यदमृतं द्वैतं मतं तत् त्वया
सम्मोदात् समुपाहृतं सुमनसां सम्प्रीतये कल्पते ॥ ॥९५॥

द्वैताख्यं सुरभूरुहं क्षितितले संरोप्य कारुण्यत-
स्तत्सेकार्थमथो कमण्डलुधरानादिश्य शिष्यान् बहून् ।
तद्रक्षार्थमभीष्टदानकुशलं सम्प्रार्थ्य विश्वप्रभुं
सम्पन्नात्ममनोरथः स यतिराट् प्रायाद्बदर्याश्रमम् ॥९६॥

योऽसौ द्वैतमहीरुहः श्रुतिमहीसंरूढमूलो महान्
नानाहंसगणैः समुज्झितनिजावासैर्मुदा सेवितः ।

---

शेषस्य च दुर्भरं दुःखहेतुश्चासीत् । तस्मिंश्च जगति द्वैतस्क-न्धेनोद्धृते सति न केवलं शेषस्य किन्तु अशेषस्यापि आश्वासः समजनीत्यर्थः ।

(९५) सुमनसाम्— देवानां सहृदयानां च ।

(९६) कमण्डलुधराः— यतिनः; सेचनकर्मानुगुण्येन कमण्डलुधर-शब्दः प्रयुक्तः कविना ।

(९७) हंसगणैः— हंसानां, परमहंसानां च गणैः । हंसाः वृक्ष सौन्दर्याकृष्टाः निजावासं पद्मभरः परित्यज्य वृक्षमाश्रिताः । परमहंसाश्च परित्यक्तस्वगृहाः द्वैतवृक्षमिमं समाश्रिता इत्यर्थः । उच्छ्रायः—औन्नत्यम् ।

व्यासेन सर्वगुरुणा परमेण पुंसा
व्यासेन शिष्यपरमाणुकणेन चापि ।
साक्षाज्जगद्गुरुरसाविति यः प्रमोदा-
त्तोष्ट्रूय्यते स खलु मध्वमुनिर्गरिष्ठः ॥ ॥१०१॥

मध्वानन्दलहरी सम्पूर्णा ॥

---

(१०१) सर्वेषां गुरुणा परमपुरुषाभिन्नेन भगवता बादरायणेन श्रीमदाचार्यः जगति सर्वमहत्वेन वर्णित इति मध्वविजयादवगम्यते। यो गुरुणा शिष्येण च गुरुत्वेन वर्ण्यते तादृशः पुरुषः गरिष्ठो भवितुमर्हतीत्याशयः ।

शिवं भूयात् ।

---

